यदि भावा न विद्यन्ते भावसंसारहेतवः।
अयं तेन भवेन्मोक्षो बालानां क्रियवर्जितः॥ ५४२॥
बालार्याणां विशेषस्ते भावाभावात्कथं भवेत्।
आर्याणां नास्ति वै भावो विमोक्षत्रयचारिणाम्॥ ५४३॥
स्कन्धाश्च पुद्गला धर्माः स्वसामान्या अलक्षणाः।		5	N 333
प्रत्ययानीन्द्रियाश्चैव श्रावकाणां वदाम्यहम्॥ ५४४॥
अहेतुचित्तमात्रं तु विभूति भूमयस्तथा।
प्रत्यात्मतथतां शुद्धां देशयामि जिनौरसाम्॥ ५४५॥
भविष्यन्त्यनागते काले मम शासनदूषकाः।
काषायवासोवसनाः सदसत्कार्यवादिनः॥ ५४६॥		10
असन्तः प्रत्ययैर्भावा विद्यन्ते ह्यार्यगोचरम्।
कल्पितो नास्ति वै भावः कल्पयिष्यन्ति तार्किकाः॥ ५४७॥
भविष्यन्त्यनागते काले कणभुग्बालजातिकाः।
असत्कार्यवाददुर्दृष्ट्या जनतां नाशयन्ति च॥ ५४८॥
अणुभ्यो जगदुत्पन्नमणवश्चाप्यहेतुकाः।		15
नव द्रव्याणि नित्यानि कुदृष्ट्या देशयिष्यति॥ ५४९॥
द्रव्यैरारभ्यते द्रव्यं गुणैश्चैव गुणास्तथा।
भावानां भावतामन्यां सतीं वै नाशयिष्यति॥ ५५०॥
आदिमान् हि भवेल्लोको यद्यभूत्वा प्रवर्तते।
पूर्वा च कोटिर्नैवास्ति संसारस्य वदाम्यहम्॥ ५५१॥		20
त्रिभवः सर्वसंख्यातं यद्यभूत्वा प्रवर्तते।		N 334
श्वानोष्ट्रखरशृङ्गाणामुत्पत्तिः स्यान्न संशयः॥ ५५२॥
यद्यभूत्वा भवेच्चक्षू रूपं विज्ञानमेव च।
कटमुकुटपटाद्यानां मृत्पिण्डात्संभवो भवेत्॥ ५५३॥
पटैश्च वै कटो नास्ति पटो वै वीरणैस्तथा।		25
एक एकत्रा संभूतः प्रत्ययैः किं न जायते॥ ५५४॥
तज्जीवं तच्छरीरं च यच्चाभूत्वा प्रवर्तते।
परवादा ह्यमी सर्वे मया च समुदाहृताः॥ ५५५॥
उच्चार्य पूर्वपक्षं च मतिस्तेषां निवार्यते।
निवार्य तु मतिस्तेषां स्वपक्षं देशयाम्यहम्॥ ५५६॥		30
अतोर्थं तीर्थवादानां कृतमुच्चारणं मया।
मा मे शिष्यगणो मूढः सदसत्पक्षमाश्रयेत्॥ ५५७॥

प्रधानाज्जगदुत्पन्नं कपिलाज्ञोऽपि दुर्मतिः ।
शिष्येभ्यः संप्रकाशेति गुणानां च विकारिता ॥ ५५८ ॥
न भूतं नापि चाभूतं प्रत्ययैर्न च प्रत्ययाः ।
प्रत्ययानामसद्भावादभूतं न प्रवर्तते ॥ ५५९ ॥
5 सदसत्पक्षविगतो हेतुप्रत्ययवर्जितः ।
उत्पादभङ्गरहितः स्वपक्षो लक्ष्यवर्जितः ॥ ५६० ॥
मायास्वप्नोपमं लोकं हेतुप्रत्ययवर्जितम् ।
N 335 अहेतुकं सदा पश्यन् विकल्पो न प्रवर्तते ॥ ५६१ ॥
गन्धर्वमृगतृष्णाभं केशोण्डुकनिभं सदा ।
10 सदसत्पक्षविगतं हेतुप्रत्ययवर्जितम् ।
अहेतुकं भवं पश्यंश्चित्तधारा विशुध्यते ॥ ५६२ ॥
वस्तु न विद्यते पश्यंश्चित्तमात्रं न विद्यते ।
अवस्तुकं कथं चित्तं चित्तमात्रं न युज्यते ॥ ५६३ ॥
वस्तुमालम्बनीकृत्य चित्तं संजायते नृणाम् ।
15 अहेतुकं कथं चित्तं चित्तमात्रं न युज्यते ॥ ५६४ ॥
तथता चित्तमात्रं च आर्यवस्तुनयस्य तु ।
विद्यन्ते न च विद्यन्ते न ते मन्नयकोविदाः ॥ ५६५ ॥
ग्राह्यग्राहकभावेन यदि चित्तं प्रवर्तते ।
एतद्धि लौकिकं चित्तं चित्तमात्रं न युज्यते ॥ ५६६ ॥
20 देहभोगप्रतिष्ठाभं स्वप्नवज्जायते यदि ।
द्विचित्तता प्रसज्येत न च चित्तं द्विलक्षणम् ॥ ५६७ ॥
स्वधारं हि यथा खड्गं स्वाग्रं वै अङ्गुलिर्यथा ।
न छिन्दते न स्पृशते तथा चित्तं स्वदर्शने ॥ ५६८ ॥
न परं न च वै तन्त्रं कल्पितं वस्तुमेव च ।
25 पञ्च धर्मा द्विचित्तं च निराभासे न सन्ति वै ॥ ५६९ ॥
N 336 उत्पादकं च उत्पाद्यं द्विविधं भावलक्षणम् ।
उत्पादकं हि संधाय नैःस्वभाव्यं वदाम्यहम् ॥ ५७० ॥
अथ वैचित्र्यसंस्थाने[१] कल्पा च यदि जायते ।
आकाशे शशशृङ्गे च अर्थाभासं भविष्यति ॥ ५७१ ॥
30 अर्थाभासं भवेच्चित्तं तदर्थः स्यादकल्पितः ।
न च वै कल्पितो ह्यर्थश्चित्तादन्योऽभिलप्यते ॥ ५७२ ॥

---

१ N °संस्थानं; our reading is based on T.

अनादिमति संसारे अर्थो वै नास्ति कुत्रचित् ।
अपुष्टं हि कथं चित्तमर्थाभासं प्रवर्तते ॥ ५७३ ॥
यद्यभावेन पुष्टिः स्याच्छशशृङ्गेऽपि तद्भवेत् ।
न चाभावेन वै पुष्टो विकल्पः संप्रवर्तते ॥ ५७४ ॥
यथापि दानीं नैवास्ति तथा पूर्वेऽपि नास्त्यसौ । 5
अनर्थे अर्थसंबद्धं कथं चित्तं प्रवर्तते ॥ ५७५ ॥
तथता शून्यता कोटिर्निर्वाणं धर्मधातुकम् ।
अनुत्पादश्च धर्माणां स्वभावः पारमार्थिकः ५७६ ॥
नास्त्यस्तिपतिता बाला हेतुप्रत्ययकल्पनैः ।
अहेतुकमनुत्पन्नं भवं वै अप्रजानतः ॥ ५७७ ॥ 10
चित्तं ख्याति न दृश्योऽस्ति विशेषोऽनादिहेतुकः ।
अनादावपि नास्त्यर्थो विशेषः केन जायते ॥ ५७८ ॥
यद्यभावेन पुष्टिः स्याद्दरिद्रो धनवान् भवेत् ।
अर्थाभावे कथं चित्तं जायते ब्रूहि मे मुने ॥ ५७९ ॥ N 337
अहेतुकमिदं सर्वं न चित्तं न च गोचरः । 15
न च वै पुष्यते चित्तं त्रिभवं क्रियवर्जितम् ॥ ५८० ॥
उत्पादविनिवृत्त्यर्थमनुत्पादप्रसाधनम् ।
अहेतुवादं देशेमि न च बालैर्विभाव्यते ।
अनुत्पन्नमिदं सर्वं न च भावा न सन्ति च ॥ ५८१ ॥
गन्धर्वस्वप्नमायाख्या भावा विद्यन्त्यहेतुकाः । 20
अनुत्पन्नान् स्वभावांश्च शून्याः केन वदासि मे ॥ ५८२ ॥
समवायविनिर्मुक्तो यदा भावो न दृश्यते ।
तदा शून्यमनुत्पन्नमस्वभावं वदाम्यहम् ॥ ५८३ ॥
स्वप्नकेशोण्डुकं माया गन्धर्व मृगतृष्णिका ।
अहेतुका पि दृश्यन्ते तथा लोकविचित्रता ॥ ५८४ ॥ 25
समवायस्तथैवैको दृश्याभावान्न विद्यते ।
न तु तीर्थ्यदृष्ट्या प्रलयो समवायो न विद्यते ॥ ५८५ ॥
विगृह्याहेतुवादेन अनुत्पादं प्रसाधयेत् ।
अनुत्पादैः प्रसाध्यन्ते मम नेत्री न नश्यति ॥ ५८६ ॥ N 338
अहेतुवादैर्देश्यन्ते तीर्थ्यानां जायते भयम् । 30
कथं केन कुतः कुत्र संभवोऽहेतुको भवेत् ॥ ५८७ ॥

नाहेतुकमहेतुत्वं यदा पश्यन्ति पण्डिताः।
तदा व्यावर्तते दृष्टिर्भङ्गोत्पादानुवादिनी ॥ ५८८ ॥
किमभावो ह्यनुत्पाद उत्पादोत्पत्तिलक्षणम्।
अथ भावस्य नामेदं निरर्थं वा ब्रवीहि मे ॥ ५८९ ॥
5 न च भावो ह्यनुत्पादो न च प्रत्ययलक्षणम्।
न च भावस्य नामेदं न च नाम निरर्थकम् ॥ ५९० ॥
यत्र श्रावकबुद्धानां तीर्थ्यानां च अगोचरः।
सप्तभूमिगतानां च तदनुत्पादलक्षणम् ॥ ५९१ ॥
हेतुप्रत्ययव्यावृत्तिं कारणस्य निषेधनम्।
10 चित्तमात्रव्यवस्थानमनुत्पादं वदाम्यहम् ॥ ५९२ ॥
अहेतुवृत्तिं भावानां कल्प्यकल्पविवर्जिताम्।
सदसत्पक्षनिर्मुक्तमनुत्पादं वदाम्यहम् ॥ ५९३ ॥
चित्तदृश्यविनिर्मुक्तं स्वभावद्वयवर्जितम्।
आश्रयस्य परावृत्तिमनुत्पादं वदाम्यहम् ॥ ५९४ ॥
N 339 15 न बाह्यभावं भावानां न च चित्तपरिग्रहम्।
सर्वदृष्टिप्रहाणं यत्तदनुत्पादलक्षणम् ॥ ५९५ ॥
एवं शून्यास्वभावाद्यान् सर्वधर्मान् विभावयेत्।
न जातु शून्यया शून्या किं त्वनुत्पादशून्यया ॥ ५९६ ॥
कलापः प्रत्ययानां हि प्रवर्तते निवर्तते।
20 कलापाच्च पृथग्भूतं न जातं न निरुध्यते ॥ ५९७ ॥
भावो न विद्यते ह्यन्यः कलापाच्च पृथक् क्वचित्।
एकत्वेन पृथक्त्वेन यथा तीर्थ्यैर्विकल्प्यते ॥ ५९८ ॥
सदसन्न जायते भावो नासन्न सदसत्क्वचित्।
अन्यत्र हि कलापोऽयं प्रवर्तते निवर्तते ॥ ५९९ ॥
25 संकेतमात्रमेवेदमन्योन्यापेक्षसंकलात्।
जन्यमर्थं न चैवास्ति पृथक्प्रत्ययसंकलात् ॥ ६०० ॥
जन्याभावो ह्यनुत्पादः तीर्थ्यदोषविवर्जितः।
देशेमि संकलामात्रं न च बालैर्विभाव्यते ॥ ६०१ ॥
यस्य जन्यो हि भावोऽस्ति संकलायाः पृथक् क्वचित्।
30 अहेतुवादी विज्ञेयः संकलाया विनाशकः ॥ ६०२ ॥
प्रदीपद्रव्यजातीनां व्यञ्जका संकला भवेत्।
यस्य भावो भवेत्कश्चित्संकलायाः पृथक् क्वचित् ॥ ६०३ ॥

N 340

अस्वभावो ह्यनुत्पन्नः प्रकृत्या गगनोपमः ।
संकलायाः पृथग्भूतो यो धर्मः कल्पितोऽबुधैः ॥ ६०४ ॥
अयमन्यमनुत्पादमार्याणां प्राप्तिधर्मता ।
यश्च तस्य अनुत्पादं तदनुत्पादक्षान्तिः स्यात् ॥ ६०५ ॥
यदा सर्वमिमं लोकं संकलामेव पश्यति ।　　5
संकलामात्रमेवेदं तदा चित्तं समाध्यते ॥ ६०६ ॥
अज्ञानतृष्णाकर्मादि संकलाध्यात्मिका भवेत् ।
खे[1]जमृद्दण्डचक्रादि बीजभूतादि बाहिरम् ॥ ६०७ ॥
परतो यस्य वै भावः प्रत्ययैर्जायते क्वचित् ।
ने[2] संकलामात्रमेवेदं न ते युक्त्यागमे स्थिताः ॥ ६०८ ॥　　10
यदि जन्यो न भावोऽस्ति स्याद्बुद्धिः कस्य प्रत्ययात् ।
अन्योन्यप्रत्यया ह्येते ते[3] तेन प्रत्ययाः स्मृताः ॥ ६०९ ॥
उष्णद्रवचलकठिना बालैर्धर्मा विकल्पिताः ।
कलापोऽयं न धर्मोऽस्ति अतो वै निःस्वभावता ॥ ६१० ॥
वैद्या यथातुरवशात्क्रियाभेदं प्रकुर्वते ।　　15
न तु शास्त्रस्य भेदोऽस्ति दोषभेदस्तु विद्यते ॥ ६११ ॥
तथाहं सत्त्वसंताने क्लेशदोषैः सुदूषितैः ।
इन्द्रियाणां बलं ज्ञात्वा नयं देशेमि बालिशान् ॥ ६१२ ॥　　N 341
न क्लेशेन्द्रियभेदेन शासनं भिद्यते मम ।
एकमेव भवेद्यानं मार्गमष्टाङ्गिकं शिवम् ॥ ६१३ ॥　　20
घटपटमुकुटविषाणहेतुकशशविषाणानास्तित्वम् ।
यद्धेतुसमुत्पन्नं स च नास्ति तेऽवगन्तव्यम् ॥ ६१४ ॥
अस्तित्वसाधकं नास्ति नास्ति नास्ति न युज्यते ।
अस्तित्वं नास्त्यपेक्ष्यं हि अन्योन्यापेक्षकारणम् ॥ ६१५ ॥
किंचिदाश्रित्य पुनः किंचित्ख्यायते यस्य वै मतम् ।　　25
अहेतुकं यदाश्रित्य किंचिच्चाहेतुकं न तु ॥ ६१६ ॥
अ[5]थ तदन्यमाश्रित्य तदप्यन्यस्य ख्यायते ।
अनवस्था प्रसज्येत किंचिच्च किं च नो भवेत् ॥ ६१७ ॥
आश्रित्य पर्णकाष्ठादीन् यथा माया प्रसज्यते ।
वस्तु तद्वत्समाश्रित्य वैचित्र्यं ख्यायते नृणाम् ॥ ६१८ ॥　　30

---

१ C ध्वज°.　२ T om. न.　३ N नैतेन for ते तेन which is supported by T.
४ N किंचाशून्यं; our reading is based on C and T.　५ N अर्थमप्यन्य°; our reading is based on C and T.

N 342

मायाजालं न पर्णानि न काष्ठं न च शर्करा ।
मायैव दृश्यते बालैर्मायाकारेण चाश्रयम् ॥ ६१९ ॥
तथा वस्तु समाश्रित्य यदि किंचिद्विनश्यति ।
दृश्यकाले द्वयं नास्ति कथं किंचिद्विकल्प्यते ॥ ६२० ॥
5 विकल्पैर्विकल्पितं नास्ति विकल्पश्च न विद्यते ।
विकल्पे ह्यविद्यमाने तु न संसृतिर्न निर्वृतिः ॥ ६२१ ॥
विकल्पे ह्यविद्यमाने तु विकल्पो न प्रवर्तते ।
अप्रवृत्तिं कथं चित्तं चित्तमात्रं न युज्यते ॥ ६२२ ॥
अनेकमतिभिन्नत्वाच्छासने नास्ति सारता ।
10 साराभावान्न मोक्षोऽस्ति न च लोकविचित्रता ॥ ६२३ ॥
बाह्यं न विद्यते दृश्यं यथा बालैर्विकल्प्यते ।
बिम्बवत्ख्यायते चित्तं वासनैर्भ्रमणीकृतम् ॥ ६२४ ॥
सर्वभावा ह्यनुत्पन्ना असत्सदसंभवाः ।
चित्तमात्रमिदं सर्वं कल्पनाभिश्च वर्जितम् ॥ ६२५ ॥
15 बालैर्भावाः समाख्याताः प्रत्ययैर्न तु पण्डितैः ।
स्वभावचित्तनिर्मुक्तश्चित्तमार्योपगं शिवम् ॥ ६२६ ॥
सांख्या वैशेषिका नग्ना विप्राः पाशुपतास्तथा ।

N 343

असत्सद्दृष्टिपतिता विविक्तार्थविवर्जिताः ॥ ६२७ ॥
निःस्वभावा ह्यनुत्पन्नाः शून्या मायोपमामलाः ।
20 कस्यैते देशिता बुद्धैस्त्वया च प्रतिवर्णिताः ॥ ६२८ ॥
योगिनां शुद्धचित्तानां दृष्टितर्कविवर्जिताः ।
बुद्धा देशेन्ति वै योगं मया च प्रतिवर्णिताः ॥ ६२९ ॥
यदि चित्तमिदं सर्वं कस्मिंल्लोकः प्रतिष्ठितः ।
गमनागमनं केन दृश्यते भूतले नृणाम् ॥ ६३० ॥
25 शकुनिर्यथा गगने विकल्पेन समीरितः ।
अप्रतिष्ठमनालम्ब्यं चरते भूतले यथा ॥ ६३१ ॥
तथा हि देहिनः सर्वे विकल्पेन समीरिताः ।
स्वचित्ते चंक्रमन्ते ते गगने शकुनिर्यथा ॥ ६३२ ॥
देहभोगप्रतिष्ठाभं ब्रूहि चित्तं प्रवर्तते ।
30 आभा वृत्तिः कथं केन चित्तमात्रं वदाहि मे ॥ ६३३ ॥
देहभोगप्रतिष्ठाश्च आभा वृत्तिश्च वासनैः ।
संजायते अयुक्तानामाभा वृत्तिर्विकल्पनैः ॥ ६३४ ॥

विषयो विकल्पितो भावश्चित्तं विषयसंभवम् ।
दृश्यचित्तपरिज्ञानाद्विकल्पो न प्रवर्तते ॥ ६३५ ॥
नाम नाम्नि विसंयुक्तं यदा पश्यति कल्पितम् । N 344
बुद्धिबोद्धव्यरहितं संस्कृतं[1] मुच्यते तदा ॥ ६३६ ॥
एता बुद्धिर्भवेद्बोध्यं नाम नाम्नि विभावनम् । 5
ये त्वन्यथावबुध्यन्ते न ते बुद्धा न बोधकाः ॥ ६३७ ॥
पञ्च धर्माः स्वभावाश्च विज्ञानान्यष्ट एव च ।
द्वे नैरात्म्ये भवेत्कृत्स्नो महायानपरिग्रहः ॥ ६३८ ॥
यदा बुद्धिश्च बोद्धव्यं विविक्तं पश्यते जगत् ।
नास्ति नाम विकल्पश्च तदा नाभिप्रवर्तते ॥ ६३९ ॥ 10
क्रियाक्षरविकल्पानां निवृत्तिश्चित्तदर्शनात् ।
अदर्शनात्स्वचित्तस्य विकल्पः संप्रवर्तते ॥ ६४० ॥
चत्वारोऽरूपिणः स्कन्धाः संख्या तेषां न विद्यते ।
भूतैर्विलक्षणै रूपं कथं रूपबहुत्वता ॥ ६४१ ॥
लक्षणस्य परित्यागान्न भूतं न च भौतिकम् । 15
अथान्यलक्षणै रूपं कस्मात्स्कन्धैर्न जायते ॥ ६४२ ॥
विमुक्तायतनस्कन्धा यदा पश्यत्यलक्षणाः ।
तदा निवर्तते चित्तं धर्मनैरात्म्यदर्शनात् ॥ ६४३ ॥
विषयेन्द्रियभेदेन विज्ञानं जायतेऽष्टधा । N 345
लक्षणेन भवेत्त्रीणि निराभासे निवर्तते ॥ ६४४ ॥ 20
आलयं हि मनस्यात्मा आत्मीयं ज्ञानमेव च ।
प्रवर्तते द्वयग्राहात्परिज्ञानान्निवर्तते ॥ ६४५ ॥
अन्यानन्यविनिर्मुक्तं यदा पश्यत्यसंचरम् ।
तदा द्वयं न कल्पन्ति आत्मा चात्मीयमेव च ॥ ६४६ ॥
अप्रवृत्तं न पुष्णाति न च विज्ञानकारणम् । 25
कार्यकारणनिर्मुक्तं निरुद्धं न प्रवर्तते ॥ ६४७ ॥
विकल्पं चित्तमात्रं च लोकं केन वदाहि मे ।
कारणैश्च विसंयुक्तं लक्ष्यलक्षणवर्जितम् ॥ ६४८ ॥
स्वचित्तं दृश्यते चित्रं दृश्याकारं विकल्पितम् ।
चित्तदृश्यापरिज्ञानादन्यं चित्तार्थसंग्रहात् ॥ ६४९ ॥ 30

---

१ N संस्कृतमुच्यते; our reading is based on C and T.

नास्तित्वदृष्टिर्भवति यदा बुद्ध्या न पश्यति ।
अस्तित्वं हि कथं तस्य चित्तग्राहान्न जायते ॥ ६५० ॥
विकल्पो न भावो नाभावो अतोऽस्तित्वं न जायते ।
चित्तदृश्यपरिज्ञानाद्विकल्पो न प्रवर्तते ॥ ६५१ ॥
5 अप्रवृत्ति विकल्पस्य परावृत्ति निराश्रयः ।
N 346 निवार्य पक्षांश्चत्वारो यदि भावा सहेतुकाः ॥ ६५२ ॥
संज्ञान्तरविशेषोऽयं कृतं केन न साधितः ।
अर्थापत्तिर्भवेत्तेषां कारणाद्वा प्रवर्तते ॥ ६५३ ॥
हेतुप्रत्ययसंयोगात्कारणप्रतिषेधतः ।
10 नित्यदोषो निवार्यते अनित्या यदि प्रत्ययाः ॥ ६५४ ॥
न संभवो न विभवो अनित्यत्वाद्धि बालिशाम् ।
न हि नश्यमानं किंचिद्वै कारणत्वेन दृश्यते ॥ ६५५ ॥
अदृष्टं हि कथं केन नानित्यो जायते भवः ।
संग्रहैश्च दमेत्सत्त्वान् शीलेन च वशीकरेत् ॥ ६५६ ॥
15 प्रज्ञया नाशयेद्दृष्टिं विमोक्षैश्च विवर्धयेत् ।
लोकायतमिदं सर्वं यत्तीर्थ्यैर्देश्यते मृषा ॥ ६५७ ॥
कार्यकारणसद्दृष्ट्या स्वसिद्धान्तं न विद्यते ।
अहमेकं स्वसिद्धान्तं कार्यकारणवर्जितः ॥ ६५८ ॥
देशेमि शिष्यवर्गस्य लोकायतविवर्जितः ।
20 चित्तमात्रं न दृश्योऽस्ति द्विधा चित्तं विदृश्यते ।
ग्राह्यग्राहकभावेन शाश्वतोच्छेदवर्जितम् ॥ ६५९ ॥
N 347 यावत्प्रवर्तते चित्तं तावल्लोकायतं भवेत् ।
अप्रवृत्तिर्विकल्पस्य स्वचित्तं पश्यतो जगत् ॥ ६६० ॥
आयं कार्याभिनिर्वृत्तिर्व्ययं कार्यस्य दर्शनम् ।
25 आयव्ययपरिज्ञानाद्विकल्पो न प्रवर्तते ॥ ६६१ ॥
नित्यमनित्यं कृतकमकृतकं परापरम् ।
एवमाद्यानि सर्वाणि ( तल्ल )लोकायतनं भवेत् ॥ ६६२ ॥
देवासुरमनुष्याश्च तिर्यक्प्रेतयमालयाः ।
गतयः षट् समाख्याता यत्र जायन्ति देहिनः ॥ ६६३ ॥
30 हीनउत्कृष्टमध्येन कर्मणा तेषु जायते ।
संरक्ष्य कुशलान् सर्वान् विशेषो मोक्ष एव वा ॥ ६६४ ॥

क्षणे क्षणे त्वया यन्मरणं उपपत्ति च ।
देश्यते भिक्षुवर्गस्य अभिप्रायं वदाहि मे ॥ ६६५ ॥
रूपाद्रूपान्तरं यद्वच्चित्तं संभूय भज्यते ।
तस्माद्देशेमि शिष्याणां क्षणजन्मपरंपराम् ॥ ६६६ ॥
रूपे रूपे विकल्पस्य संभवो विभवस्तथा । 5
विकल्पो हि भवेज्जन्तुर्विकल्पोऽन्यो न विद्यते ॥ ६६७ ॥
क्षणे क्षणे यन्न युक्तमिदंप्रत्ययभाषितम् ।
रूपग्राहविनिर्मुक्तं न जन्म न च भज्यते ॥ ६६८ ॥ N 348
प्रत्ययाः प्रत्ययोत्पन्ना अविद्यातथतादयः ।
धर्मद्वयेन वर्तन्ते अद्वया तथता भवेत् ॥ ६६९ ॥ 10
प्रत्ययाः प्रत्ययोत्पन्ना यदि धर्मा विशेषिताः ।
नित्यादयो भवेत्कार्यं कारणं प्रत्ययो भवेत् ॥ ६७० ॥
निर्विशिष्टं भवेत्तीर्थ्यैः कार्यकारणसंग्रहात् ।
वादस्तव च बुद्धानां तस्मान्नार्यो महामुने ॥ ६७१ ॥
शरीरे व्याममात्रे च लोकं वै लोकसमुदयम् । 15
निरोधगामिनी प्रतिपदेशयामि जिनौरसान् ॥ ६७२ ॥
स्वभावत्रयग्राहेण ग्राह्यग्राहविदृष्टयः ।
लोक्यलोकोत्तरान् धर्मान् विकल्पेन्ति पृथग्जनाः ॥ ६७३ ॥
अतः स्वभावग्रहणं क्रियते पूर्वपक्षया ।
निवारार्थं तु दृष्टीनां स्वभावं न विकल्पयेत् ॥ ६७४ ॥ 20
छिद्रदोषान्न नियमो न वा चित्तं प्रवर्तते ।
प्रवृत्तिद्वयग्राहेण अद्वया तथता भवेत् ॥ ६७५ ॥
अज्ञान तृष्णा कर्म च विज्ञानाद्या अयोनिजाः । N 349
अनवस्थाकृतकत्वं च न कृत्वा जायते भवः ॥ ६७६ ॥
चतुर्विधश्च प्रध्वंसो भावानां कथ्यतेऽबुधैः । 25
द्विधावृत्तेर्विकल्पस्य भावाभावो न विद्यते ।
चातुष्कोटिकनिर्मुक्तं दर्शनद्वयवर्जितम् ॥ ६७७ ॥
द्विधावृत्तिविकल्पः स्याद्दृष्ट्वा नाभिप्रवर्तते ।
अनुत्पन्नेषु भावेषु बुद्धेर्व्युत्थानभावतः ॥ ६७८ ॥
उत्पन्नेष्वपि भावेषु तत्कल्पत्वान्न कल्पयेत् । 30
युक्तिं वदाहि मे नाथ द्विधादृष्टिनिवारणात् ॥ ६७९ ॥

यथाहमन्ये च सदा नास्त्यस्ति न विसंकरेत्।
तीर्थवादअसंसृष्टाः श्रावकैर्जिनवर्जिताः।
जिनाभिसमयचर्यां च जिनपुत्राविनाशतः॥ ६८०॥

विमोक्षहेत्वहेतुश्चाप्यनुत्पादैकलक्षणः।
5 पर्यायैर्मोहयन्त्येतां वर्जनीयां सदा बुधैः॥ ६८१॥

मेघाभ्रकूटेन्द्रधनुःप्रकाशा
मरीचिकेशोण्डुकमायतुल्याः।
भावा हि सर्वे स्वविकल्पसंभवा-
स्तीर्थ्या विकल्पेन्ति जगत्स्वकारणैः॥ ६८२॥

10 अनुत्पादश्च तथता भूतकोटिश्च शून्यता।
रूपस्य नामान्येतानि अभावं न विकल्पयेत्॥ ६८३॥

N 350 हस्तः करो यथा लोके इन्द्रः शक्रः पुरंदरः।
तथा हि सर्वभावानामभावं न विकल्पयेत्॥ ६८४॥

रूपाच्च शून्यता नान्या अनुत्पादं तथैव च।
15 न कल्पयेदनन्यत्वादृष्टिदोषः प्रसज्यते॥ ६८५॥

संकल्पश्च विकल्पश्च वस्तुलक्षणसंग्रहात्।
दीर्घह्रस्वादिमाण्डल्यं परिकल्पस्य संग्रहात्॥ ६८६॥

संकल्पो हि भवेच्चित्तं परिकल्पो मनस्तथा।
विकल्पो मनविज्ञानं लक्ष्यलक्षणवर्जितम्॥ ६८७॥

20 यच्च तीर्थ्यैरनुत्पादो यच्च मन्नयदृष्टिभिः।
कल्प्यते निर्विशिष्टोऽयं दृष्टिदोषः प्रसज्यते॥ ६८८॥

प्रयोजनमनुत्पादमनुत्पादार्थमेव च।
ये वै जानन्ति युक्तिज्ञास्तेऽभिबुध्यन्ति मन्नयम्॥ ६८९॥

प्रयोजनं दृष्टिसंकोचमनुत्पादमनालयम्।
25 अर्थद्वयपरिज्ञानादनुत्पादं वदाम्यहम्॥ ६९०॥

भावा विद्यन्त्यनुत्पन्ना न वा ब्रूहि महामुने।
अहेतुवादोऽनुत्पादो प्रवृत्तिस्तीर्थदर्शनम्॥ ६९१॥

N 351 अहेतुवादोऽनुत्पादो वैषम्यतीर्थदर्शनम्।
अस्तिनास्तिविनिर्मुक्तं चित्तमात्रं वदाम्यहम्॥ ६९२॥

0 उत्पादमनुत्पादं वर्जयेद्दृष्टिहेतुकम्।
अहेतुवादेऽनुत्पादे उत्पादे कारणाश्रयः॥ ६९३॥

अनाभोगक्रिया नास्ति क्रिया चेद्दृष्टिसंकरः ।
उपायप्रणिधानाद्यैर्दृष्टिमेव वदाहि मे ।
असत्त्वात्सर्वधर्माणां मण्डलं जायते कथम् ॥ ६९४ ॥
ग्राह्यग्राहकविसंयोगान्न प्रवृत्तिर्न निर्वृतिः ।
भावाद्भावान्तरं दृष्टिं चित्तं वै तत्समुत्थितम् ॥ ६९५ ॥ 5
अनुत्पादश्च धर्माणां कथमेतद्वदाहि मे ।
सत्त्वाश्चेन्नावबुध्यन्ते अत एतत्प्रकाश्यते ॥ ६९६ ॥
पूर्वोत्तरविरोधं च सर्वं भाष्य महामुने ।
तीर्थदोषविनिर्मुक्तं विषमाहेतुवर्जितम् ॥ ६९७ ॥
अप्रवृत्तिर्निवृत्तिश्च ब्रूहि मे वादिनांवर । 10
अस्तिनास्तिविनिर्मुक्तं फलहेत्वविनाशकम् ॥ ६९८ ॥
भूमिक्रमानुसंधिश्च ब्रूहि मे धर्मलक्षणम् ।
द्वयान्तपतितो लोको दृष्टिभिर्व्याकुलीकृतः ॥ ६९९ ॥
अनुत्पादा उत्पादाद्यैः शमहेतुर्न बुध्यते । N 352
मण्डलं हि न मे किंचिन्न च देशेमि धर्मताम् ॥ ७०० ॥ 15
द्वये सति हि दोषः स्याद्द्वयं बुद्धैर्विशोधितम् ।
शून्याश्च क्षणिका भावा निःस्वभावा ह्यजातिकाः ॥ ७०१ ॥
कुदृष्टिवादसंछन्नैः कल्प्यन्ते न तथागतैः ।
प्रवृत्तिं च निवृत्तिं च विकल्पस्य वदाहि मे ॥ ७०२ ॥
यथा येन प्रकारेण जायते विषयो मुखम् । 20
वर्णपुष्कलसंयोगात्प्रपञ्चैः समुदानितम् ॥ ७०३ ॥
रूपं दृष्ट्वा बहिर्धा वै विकल्पः संप्रवर्तते ।
तस्यैव हि परिज्ञानाद्यथाभूतार्थदर्शनात् ।
आर्यगोत्रानुकूलं च चित्तं नाभिप्रवर्तते ॥ ७०४ ॥
प्रत्याख्याय तु भूतानि भावोत्पत्तिर्न विद्यते । 25
भूताकारं सदा चित्तमनुत्पन्नं विभावयेत् ॥ ७०५ ॥
मा विकल्पं विकल्पेथ निर्विकल्पा हि पण्डिताः ।
विकल्पं विकल्पयंस्तस्य द्वयमेव न निर्वृतिः ॥ ७०६ ॥
अनुत्पादप्रतिज्ञस्य माया च दृश्यते [1]नयः ।
मायानिर्हेतुसंभूतं हानिसिद्धान्तलक्षणम् ॥ ७०७ ॥ 30

१ N नयेत्; our reading is based on T.

N 353

बिम्बवद्दृश्यते चित्तमनादिमतिभावितम् ।
अर्थाकारं न चार्थोऽस्ति यथाभूतं विभावयेत् ॥ ७०८ ॥
यथा हि दर्पणे रूपमेकत्वान्यत्ववर्जितम् ।
दृश्यते न च तन्नास्ति तथा चोत्पादलक्षणम् ॥ ७०९ ॥
5 गन्धर्वमायादि यथा हेतुप्रत्ययलक्षणाः ।
तथा हि सर्वभावानां संभवो न ह्यसंभवः ॥ ७१० ॥
विकल्पः पुरुषाकारो द्विधावृत्त्या प्रवर्तते ।
आत्मधर्मोपचारैश्च न च बालैर्विभाव्यते ॥ ७११ ॥
विपुलप्रत्ययाधीनः श्रावकोऽपि ह्यर्हंस्तथा ।
10 स्वबलाधीनं जिनाधीनं पञ्चमं श्रावकं नयेत् ॥ ७१२ ॥
कालान्तरं च प्रध्वस्तं परमार्थेतरेतरम् ।
चतुर्विधमनित्यत्वं बालाः कल्पेन्त्यकोविदाः ॥ ७१३ ॥
द्वयान्तपतिता बाला गुणाणुप्रकृतिकारणैः ।
मोक्षोपायं न जानन्ति सदसत्पक्षसंग्रहात् ॥ ७१४ ॥

N 354

15 अङ्गुल्यग्रं यथा बालैश्चन्द्रं गृह्णन्ति दुर्मतिः ।
तथा ह्यक्षरसंसक्तास्तत्त्वं नावेन्ति मामकम् ॥ ७१५ ॥
विलक्षणानि भूतानि रूपभावप्रवर्तका ।
भूतानां संनिवेशोऽयं न भूतैर्भौतिकं कृतम् ॥ ७१६ ॥
अग्निना दह्यते रूपमब्धातुः क्लेदनात्मकः ।
20 वायुना कीर्यते रूपं कथं भूतैः प्रवर्तते ॥ ७१७ ॥
रूपं स्कन्धश्च विज्ञानं द्वयमेतन्न पञ्चकम् ।
पर्यायभेदं स्कन्धानां शतधा देशयाम्यहम् ॥ ७१८ ॥
चित्तचैत्तस्य भेदेन वर्तमानं प्रवर्तते ।
व्यतिभिन्नानि रूपाणि चित्तं रूपं न भौतिकम् ॥ ७१९ ॥
25 नीलाद्यपेक्षणं श्वेतं श्वेतं नीलं ह्यपेक्षणम् ।
कार्यकारणमुत्पाद्य शून्यता अस्ति नास्ति च ॥ ७२० ॥
साधनं साधकं साध्यं शीतोष्णे लक्ष्यलक्षणम् ।
एवमाद्यानि सर्वाणि तार्किकैर्न प्रसाधिताः ॥ ७२१ ॥
चित्तं मनश्च षड्वान्यविज्ञानान्यात्मसंयुता ।
30 एकत्वान्यत्वरहिता आलयोऽयं प्रवर्तते ॥ ७२२ ॥
सांख्या वैशेषिका नग्नास्तार्किका ईश्वरोदिताः ।
सदसत्पक्षपतिता विविक्तार्थविवर्जिताः ॥ ७२३ ॥

संस्थानाकृतिविशेषो भूतानां नास्ति भौतिकम् ।          N 355
तीर्थ्या वदन्ति जन्म भूतानां भौतिकस्य च ॥ ७२४ ॥
अनुत्पन्ना यतो येऽन्ये तीर्थ्याः कल्पन्ति कारणैः ।
न च बुध्यन्ति मोहेन सदसत्पक्षमाश्रिताः ॥ ७२५ ॥
चित्तेन सह संयुक्तं विसंयुक्तं मनादिभिः ।          5
विशुद्धलक्षणं सत्त्वं ज्ञानेन सह तिष्ठति ॥ ७२६ ॥
कर्म यच्च भवेद्रूपं स्कन्धविषयहेतुकाः ।
सत्त्वाश्च निरुपादाना आरूप्ये नावतिष्ठति ॥ ७२७ ॥
नैरात्म्यं सत्त्ववादित्वं[१] सत्त्वाभावात्प्रसज्यते ।
नैरात्म्यवादिनो च्छेदो विज्ञानस्याप्यसंभवः ॥ ७२८ ॥          10
चत्वारः स्थितयस्तस्य रूपाभावात्कथं भवेत् ।
अध्यात्मबाह्याभावाद्विज्ञानं न प्रवर्तते ॥ ७२९ ॥
अन्तराभविकाः स्कन्धाः यथैवेच्छन्ति तार्किकाः ।
तथारूप्योपपन्नस्य भवोऽरूपो न चास्ति किम् ॥ ७३० ॥
अप्रयत्नेन मोक्षः स्यात्सत्त्वविज्ञानयोर्विना ।          15
तीर्थ्यवादो न संदेहो न च बुध्यन्ति तार्किकाः ॥ ७३१ ॥
रूपं च विद्यते तत्र आरूप्ये नास्ति दर्शनम् ।
तदभावो न सिद्धान्तो न यानं न च यायिनम् ॥ ७३२ ॥          N 356
इन्द्रियैः सह संयुक्तं विज्ञानं वासनोद्भवम् ।
अष्टविधैकदेशं[२] हि क्षणे काले न गृह्णन्ति ॥ ७३३ ॥          20
न प्रवर्तति यदा रूपं इन्द्रिया न च इन्द्रियैः ।
अतो हि देशेति भगवान् क्षणिका इन्द्रियादयः ॥ ७३४ ॥
अनिर्धार्य कथं रूपं विज्ञानं संप्रवर्त्स्यते ।
अप्रवृत्तं कथं ज्ञानं संसारं जनयिष्यति ॥ ७३५ ॥
उत्पत्त्यनन्तरं भङ्गं न देशेन्ति विनायकाः ।          25
नैरन्तर्यं न भावानां विकल्पस्पन्दिते गतौ ॥ ७३६ ॥
इन्द्रिया इन्द्रियार्थाश्च मूढानां न तु पण्डिताः ।
बाला गृह्णन्ति नामेन आर्या वै अर्थकोविदाः ॥ ७३७ ॥
षष्ठं हि निरुपादानः सोपादानो न गृह्यते ।
अनिर्धार्यं वदन्त्यार्या अस्तिदोषैर्विवर्जिताः ॥ ७३८ ॥          30

---

१ N सत्यवादित्वं; T सत्त्ववादस्य. २ N अष्टवदेकदेशं; our reading is based on T.

N 357 शाश्वतोच्छेदभीताश्च तार्किका ज्ञानवर्जिताः ।
संस्कृतासंस्कृतात्मानं न विशेषन्ति बालिशाः ॥ ७३९ ॥
एकत्वे विद्यते दानमन्यत्वे चापि विद्यते ।
चित्तेन सह चैकत्वमन्यत्वं वै मनादिभिः ॥ ७४० ॥
5 निर्धार्यते यदा दानं चित्तं चैत्ताभिशब्दितम् ।
उपादानात्कथं तत्र एकत्वेनावधार्यते ॥ ७४१ ॥
सोपादानोपलब्धिश्च कर्मजन्मक्रियादिभिः ।
अग्निवत्साधयिष्यन्ति सदृशासदृशैर्नयैः ॥ ७४२ ॥
यथा हि अग्निर्युगपद्दह्यते दाह्यदाहकौ ।
10 सोपादानस्तथा ह्यात्मा तार्किकैः किं न गृह्यते ॥ ७४३ ॥
उत्पादाद्वाप्यनुत्पादाच्चित्तं वै भास्वरं सदा ।
दृष्टान्तं किं न कुर्वन्ति तार्किका आत्मसाधकाः ॥ ७४४ ॥
विज्ञानगह्वरे मूढास्तार्किका नयवर्जिताः ।
इतस्ततः प्रधावन्ति आत्मवादचिकीर्षया ॥ ७४५ ॥
15 प्रत्यात्मगतिगम्यश्च आत्मा वै शुद्धिलक्षणम् ।
गर्भस्तथागतस्यासौ तार्किकाणामगोचरः ॥ ७४६ ॥
उपादानउपादात्रोर्विभागस्कन्धयोस्तथा ।
लक्षणं यदि जानाति ज्ञानं संजायते नयम् ॥ ७४७ ॥
N 358 आलयं गर्भसंस्थानं मतं तीर्थ्यानुवर्णितम् ।
20 आत्मना सह संयुक्तं न च धर्माः प्रकीर्तिताः ॥ ७४८ ॥
एतेषां प्रविभागेन विमोक्षः सत्यदर्शनम् ।
भावानां दर्श्यहेयानां क्लेशानां स्याद्विशोधनम् ॥ ७४९ ॥
प्रकृतिप्रभास्वरं चित्तं गर्भं ताथागतं शुभम् ।
उपादानं हि सत्त्वस्य अन्तानन्तविवर्जितम् ॥ ७५० ॥
25 कान्तिर्यथा सुवर्णस्य जातरूपं च शर्करम् ।
परिकर्मेण पश्यन्ति सत्त्वं स्कन्धालयैस्तथा ॥ ७५१ ॥
न पुद्गलो न च स्कन्धा बुद्धो ज्ञानमनास्रवम् ।
सदाशान्ति विभावित्वा गच्छामि शरणं ह्यहम् ॥ ७५२ ॥
प्रकृतिप्रभास्वरं चित्तमुपक्लेशैर्मनादिभिः ।
30 आत्मना सह संयुक्तं देशेति वदतांवरः ॥ ७५३ ॥
प्रकृतिप्रभास्वरं चित्तं मनाद्यस्तस्य वै परः ।
तैराचितानि कर्माणि यतः क्लिश्यन्ति तावुभौ ॥ ७५४ ॥

आगन्तुकैरनाद्यैश्च क्लेशैरात्मा प्रभास्वरः ।
संक्लिश्यते उपेतश्च वस्त्रवत्परिशुध्यते ॥ ७५५ ॥　　N 359
मलाभावाद्यथा वस्त्रं हेमं वा दोषवर्जितम् ।
तिष्ठन्ति न च नश्यन्ते आत्मा दोषैस्तथा विना ॥ ७५६ ॥
वीणाशङ्खेऽथ भेर्यां च माधुर्यस्वरसंपदा ।　　5
मृगयेद्वयकोविदः कश्चित्तथा स्कन्धेषु पुद्गलम् ॥ ७५७ ॥
निधयो मणयश्चापि पृथिव्यामुदकं तथा ।
विद्यमाना न दृश्यन्ति तथा स्कन्धेषु पुद्गलम् ॥ ७५८ ॥
चित्तचैत्तकलापांश्च स्वगुणां स्कन्धसंयुतां ।
अकोविदा न गृह्णन्ति तथा स्कन्धेषु पुद्गलम् ॥ ७५९ ॥　　10
यथा हि गर्भो गर्भिण्यां विद्यते न च दृश्यते ।
आत्मा हि तद्वत्स्कन्धेषु अयुक्तिज्ञो न पश्यति ॥ ७६० ॥
औषधीनां यथा सारमग्निं वा इन्धनैर्यथा ।
न पश्यन्ति अयुक्तिज्ञास्तथा स्कन्धेषु पुद्गलम् ॥ ७६१ ॥
अनित्यतां सर्वभावेषु शून्यतां च यथाबुधाः ।　　15
विद्यमानां न पश्यन्ति तथा स्कन्धेषु पुद्गलम् ॥ ७६२ ॥
भूमयो वशिताभिज्ञा अभिषेकं च उत्तरम् ।
समाधयो विशेषाश्च असत्यात्मनि नास्ति वै ॥ ७६३ ॥
वैनाशिको यदा गत्वा ब्रूयाद्यद्यस्ति देश्यताम् ।　　N 360
स वक्तव्यो भवेद्विज्ञः स्वविकल्पं प्रदर्शय ॥ ७६४ ॥　　20
नैरात्म्यवादिनोऽभाष्या भिक्षुकर्माणि वर्जय ।
बाधका बुद्धधर्माणां सदसत्पक्षदृष्टयः ॥ ७६५ ॥
तीर्थदोषैर्विनिर्मुक्तं नैरात्म्यवनदाहकम् ।
जाज्वलत्यात्मवादोऽयं युगान्ताग्निरिवोत्थितः ॥ ७६६ ॥
खण्डेक्षुशर्करमध्वादिदधितिलघृतादिषु ।　　25
स्वरसं विद्यते तेषु अनास्वाद्यं न गृह्यते ॥ ७६७ ॥
पञ्चधा गृह्यमाणश्च आत्मा स्कन्धसमुच्छ्रये ।
न च पश्यन्त्यविद्वांसो विद्वान् दृष्ट्वा विमुच्यते ॥ ७६८ ॥
विद्यादिभिश्च दृष्टान्तैश्चित्तं नैवावधार्यते ।
यत्र यस्माद्यदर्थं च समूहं नावधार्यते ॥ ७६९ ॥　　30
विलक्षणा हि वै धर्माश्चित्तमेकं न गृह्यते ।
अहेतुरप्रवृत्तिश्च तार्किकाणां प्रसज्यते ॥ ७७० ॥

चित्तानुपश्यी च योगी चित्तं चित्ते न पश्यति।
पश्यको दृश्यनिर्जातो दृश्यं किं हेतुसंभवम्॥ ७७१॥
N 361 कात्यायनस्य गोत्रोऽहं शुद्धावासाद्विनिःसृतः।
देशेमि धर्मं सत्त्वानां निर्वाणपुरगामिनम्॥ ७७२॥
5 पौराणिकमिदं वर्त्म अहं ते च तथागताः।
त्रिभिः सहस्रैः सूत्राणां निर्वाणमत्यदेशयन्॥ ७७३॥
कामधातौ तथारूप्ये न वै बुद्धो विबुध्यते।
रूपधात्वकनिष्ठेषु वीतरागेषु बुध्यते॥ ७७४॥
न बन्धहेतुर्विषया हेतुर्विषयबन्धनम्।
10 ज्ञानबध्यानि क्लेशानि असिधारव्रतो ह्ययम्॥ ७७५॥
असत्यात्मनि मायाद्या धर्मा नास्त्यस्ति वै कथम्।
बालानां ख्याति तथता कथं नास्ति निरात्मिका॥ ७७६॥
कृतकाकृतकत्वाद्धि नास्ति हेतुः प्रवर्तकः।
अनुत्पन्नमिदं सर्वं न च बालैर्विभाव्यते॥ ७७७॥
15 कारणानि अनुत्पन्ना कृतकाः प्रत्ययाश्च ते।
द्वावप्येतौ न जनकौ कारणैः कल्प्यते कथम्॥ ७७८॥
प्राक्पश्चाद्युगपच्चापि हेतुं वर्णेन्ति तार्किकाः।
प्रकाशघटशिष्याद्यैर्भावानां जन्म कथ्यते॥ ७७९॥
नाभिसंस्कारिकैर्बुद्धा लक्षणैर्लक्षणान्विताः।
N 362 20 चक्रवर्तिगुणा ह्येते नैते बुद्धप्रभाषिताः॥ ७८०॥
बुद्धानां लक्षणं ज्ञानं दृष्टिदोषैर्विवर्जितम्।
प्रत्यात्मदृष्टिगतिकं सर्वदोषविघातकम्॥ ७८१॥
बधिरान्धकाणमूकानां वृद्धानां वैरवृत्तिनाम्।
बालानां च विशेषेण ब्रह्मचर्यं न विद्यते॥ ७८२॥
25 आवृतैर्व्यञ्जनैर्दिव्यैर्लक्षणैश्चक्रवर्तिनः।
व्यञ्जितैः प्रव्रजन्त्येके न चान्ये च प्रवादिनः॥ ७८३॥
व्यासः कणाद ऋषभः कपिलः शाक्यनायकः।
निर्वृते मम पश्चात्तु भविष्यन्त्येवमादयः॥ ७८४॥
मयि निर्वृते वर्षशते व्यासो वै भारतस्तथा।
30 पाण्डवाः कौरवा रामः पश्चान्मौरी भविष्यति॥ ७८५॥
मौर्या नन्दाश्च गुप्ताश्च ततो म्लेच्छा नृपाधमाः।
म्लेच्छान्ते शस्त्रसंक्षोभः शस्त्रान्ते च कलिर्युगः।
N 363 कलियुगान्ते लोकैश्च सद्धर्मो हि न भावितः॥ ७८६॥

एवमाद्यान्यतीतानि चक्रवद्भ्रमते जगत् ।
वह्न्यादित्यसमायोगात्कामधातुर्विदीर्यते ॥ ७८७ ॥
पुनः संस्थास्यते दिव्यं तस्मिँल्लोकः प्रवर्त्स्यते ।
चातुर्वर्णा नृपेन्द्राश्च ऋषयो धर्ममेव च ॥ ७८८ ॥
वेदाश्च यज्ञं दानं च धर्मस्था वर्त्स्यते पुनः ।　　5
आख्यायिकेतिहासाद्यैर्गद्यचूर्णिकवार्तिकैः ।
एवं मया श्रुतादिभ्यो लोको वै विभ्रमिष्यति ॥ ७८९ ॥
सुरक्ताकोटितं कृत्वा उपरिष्टाद्विवर्णयेत् ।
नीलकर्दमगोमयैः पटं वै संप्रचित्रयेत् ।
सर्ववासैर्विचित्राङ्गस्तीर्थ्यलिङ्गविवर्जितः ॥ ७९० ॥　　10
शासनं देशयेद्योगी बुद्धानामेष वै ध्वजः ।
वस्त्रपूतं जलं पेयं कटिसूत्रं च धारयेत् ।
उपपद्यमानं कालेन भैक्ष्यं वा नीचवर्जितम् ॥ ७९१ ॥
दिव्यं संजायते स्वर्गाद्द्वौ चान्यौ मानुषोद्भवौ ।　　N 364
रत्नलक्षणसंपन्नो देवजन्मजगेश्वरः ॥ ७९२ ॥　　15
स्वर्गं प्रभुञ्जते द्वीपांश्चतुरो धर्मशासनः ।
भुक्त्वा तु सुचिरं द्वीपांस्तृष्णया विप्रणश्यति ॥ ७९३ ॥
कृतयुगश्च त्रेता च द्वापरं कलिनस्तथा ।
अहं चान्ये कृतयुगे शाक्यसिंहः कलौ युगे ॥ ७९४ ॥
सिद्धार्थः शाक्यतनयो विष्णुर्व्यासो महेश्वरः ।　　20
एवमाद्यानि तीर्थ्यानि निर्वृते मे भविष्यति ॥ ७९५ ॥
एवं मया श्रुतादिभ्यः शाक्यसिंहस्य देशना ।
इतिहासं पुरावृत्तं व्यासस्यैतद्भविष्यति ॥ ७९६ ॥
विष्णुर्महेश्वरश्चापि सृष्टित्वं देशयिष्यति ।
एवं मे निर्वृते पश्चादेवमाद्यं भविष्यति ॥ ७९७ ॥　　25
माता च मे वसुमतिः पिता विप्रः प्रजापतिः ।
कात्यायनसगोत्रोऽहं नाम्ना वै विरजो जिनः ॥ ७९८ ॥
चम्पायां हं समुत्पन्नः पितापि च पितामहः ।
सोमगुप्तेति नाम्नासौ सोमवंशसमुद्भवः ॥ ७९९ ॥
चीर्णव्रतः प्रव्रजितः सहस्रं देशितं नयम् ।　　30　　N 365
व्याकृत्य परिनिर्वास्ये अभिषिच्य महामतिम् ॥ ८०० ॥

मतिर्दास्यति धर्माय धर्मो दास्यति मेखले ।
मेखलः शिष्यो दौर्बल्यात्कल्पान्ते नाशयिष्यति ॥ ८०१ ॥
काश्यपः क्रकुच्छन्दश्च कनकश्च विनायकः ।
अहं च विरजोऽन्ये वै सर्वे ते कृतिनो जिनाः ॥ ८०२ ॥
5 कृते युगे ततः पश्चान्मतिर्नामेन नायकः ।
भविष्यति महावीरः पञ्चज्ञेयावबोधकः ॥ ८०३ ॥
न द्वापरे न त्रेतायां न पश्चाच्च कलौ युगे ।
संभवो लोकनाथानां संबुध्यन्ते कृते युगे ॥ ८०४ ॥
अहार्या लक्षणायाश्च अच्छिन्नदशकैः सह ।
10 मोरचन्द्रसमैश्चन्द्रैरुत्तरीयं विचित्रयेत् ॥ ८०५ ॥
द्व्यङ्गुलं त्र्यङ्गुलं वापि चन्द्रं चन्द्रान्तरं भवेत् ।
अन्यथा चित्र्यमानं हि लोभनीयं हि बालिशान् ॥ ८०६ ॥
रागाग्निं शमयेन्नित्यं स्नायाद्वै ज्ञानवारिणा ।
त्रिशरणं त्रिसंध्यासु योगी कुर्यात्प्रयत्नतः ॥ ८०७ ॥
N 366 15 इषुप्रस्तरकाष्ठाद्या उत्क्षेपाद्यैः समीरिताः ।
एकः क्षिप्तः पतत्येकः कुशलाकुशलस्तथा ॥ ८०८ ॥
एकं च बहुधा नास्ति वैलक्षण्यान्न कुत्रचित् ।
वायुभा ग्राहकाः सर्वे क्षेत्रवद्दायका भवेत् ॥ ८०९ ॥
यद्येकं बहुधा वै स्यात्सर्वे ह्यकृतका भवेत् ।
20 कृतकस्य विनाशः स्यात्तार्किकाणामयं नयः ॥ ८१० ॥
दीपबीजवदेतत्स्यात्सादृश्याद्बहुधा कुतः ।
एकं हि बहुधा भवति तार्किकाणामयं नयः ॥ ८११ ॥
न तिलाज्जायते मुद्गो न व्रीहिर्यवहेतुकः ।
गोधूमधान्यजातानि एकं हि बहुधा कथम् ॥ ८१२ ॥
25 पाणिनिं शब्दनेतारमक्षपादो बृहस्पतिः ।
लोकायतप्रणेतारो ब्रह्म गर्भो भविष्यति ॥ ८१३ ॥
कात्यायनः सूत्रकर्ता यज्ञवल्कस्तथैव च ।
भुढुकज्योतिषाद्यानि भविष्यन्ति कलौ युगे ॥ ८१४ ॥
N 367 बली पुण्यकृताल्लोकात्प्रजाभाग्याद्भविष्यति ।
30 रक्षकः सर्वधर्माणां राजा बली महीपतिः ॥ ८१५ ॥
वाल्मीको मसुराक्षश्च कौटिल्य आश्वलायनः ।
ऋषयश्च महाभागा भविष्यन्ति अनागते ॥ ८१६ ॥

सिद्धार्थः शाक्यतनयो भूतान्तः पञ्चचूडकः ।
वाग्बलिरथ मेधावी पश्चात्काले भविष्यति ॥ ८१७ ॥
अजिनं दण्डकाष्ठं च मेखलाचक्रमण्डलम् ।
ददाति ब्रह्मा महेश्वरो वनभूमौ व्यवस्थिते ॥ ८१८ ॥
भविष्यति महायोगी नाम्ना वै विरजो मुनिः ।    5
मोक्षस्य देशकः शास्ता मुनीनामेष वै ध्वजः ॥ ८१९ ॥
ब्रह्मा ब्रह्मशतैः सार्धं देवैश्च बहुभिर्मम ।
अजिनं प्रपाल्य गगनात्तत्रैवान्तर्हितो वशी ॥ ८२० ॥
सर्वचित्राणि वासांसि भैक्ष्यपात्रं सुरैः सह ।
इन्द्रो विरूढकाद्याश्च वनभूमौ ददन्ति मे ॥ ८२१ ॥    10
अनुत्पादवादहेत्विष्टोऽजातो जायेत वा पुनः ।    N 368
साधयिष्यत्यनुत्पादं वाङ्मात्रं कीर्त्यते तु वै ॥ ८२२ ॥
तस्याविद्या कारणं तेषां चित्तानां संप्रवर्तिता ।
अन्तरा किमवस्थासौ यावद्रूपं न जानति ॥ ८२३ ॥
समनन्तरप्रध्वस्तं चित्तमन्यत्प्रवर्तते ।    15
रूपं न तिष्ठते किंचित्किमालम्ब्य प्रवर्त्स्यते ॥ ८२४ ॥
यस्माद्यत्र प्रवर्तेत चित्तं वितथहेतुकम् ।
न प्रसिद्धं कथं तस्य क्षणभङ्गोऽवधार्यते ॥ ८२५ ॥
योगिनां हि समापत्तिः सुवर्णजिनधातवः ।
आभास्वरविमानानि अभेद्या लोककारणात् ॥ ८२६ ॥    20
स्थितयः प्राप्तिधर्माश्च बुद्धानां ज्ञानसंपदः ।
भिक्षुत्वं समयप्राप्तिर्दृष्टा वै क्षणिका कथम् ॥ ८२७ ॥
गन्धर्वपुरमायाद्या रूपा वै क्षणिका कथम् ।
अभूतिका च भूतानि भूताः किंचित्क चागतौ ॥ ८२८ ॥
अविद्याहेतुकं चित्तमनादिमतिसंचितम् ।    25
उत्पादभङ्गसंबद्धं तार्किकैः संप्रकल्प्यते ॥ ८२९ ॥
द्विविधः सांख्यवादश्च प्रधानात्परिणामिकम् ।
प्रधाने विद्यते कार्यं कार्यं स्वात्मप्रसाधितम् ॥ ८३० ॥    N 369
प्रधानं सह भावेन गुणभेदः प्रकीर्तितः ।
कार्यकारणवैचित्र्यं परिणामे न विद्यते ॥ ८३१ ॥    30
यथा हि पारदः शुद्ध उपक्लेशैर्न लिप्यते ।
आलयं हि तथा शुद्धमाश्रयः सर्वदेहिनाम् ॥ ८३२ ॥

हिङ्गुगन्धः पलाण्डुश्च गर्भिण्या गर्भदर्शनम् ।
लवणादिभिश्च लावण्यं बीजवत्किं न वर्तते ॥ ८३३ ॥
अन्यत्वे च तदन्यत्वे उभयं नोभये तथा ।
अस्तित्वं निरुपादानं न च नास्ति न संस्कृतम् ॥ ८३४ ॥
5 अश्ववद्विद्यते ह्यात्मा स्कन्धैर्गोभाववर्जितम् ।
संस्कृतासंस्कृतं वाच्यमवक्तव्यं स्वभावकम् ॥ ८३५ ॥
युक्त्यागमाभ्यां दुर्दृष्ट्या तर्कदृष्ट्या मलीकृतम् ।
अनिर्धार्यं वदन्त्यात्मा नोपादाने न चान्यतः ॥ ८३६ ॥
दोषनिर्धारणा ह्येषां स्कन्धेनात्मा विभाव्यते ।
10 एकत्वेन तदन्यत्वेन न च बुध्यन्ति तार्किकाः ॥ ८३७ ॥
दर्पणे उदके नेत्रे यथा बिम्बं प्रदृश्यते ।
N 370 एकत्वान्यत्वरहितस्तथा स्कन्धेषु पुद्गलः ॥ ८३८ ॥
भाव्यं विभावनाध्याता मार्गः सत्या च दर्शनम् ।
एतत्रयं विभावेन्तो मुच्यन्ते हि कुदर्शनैः ॥ ८३९ ॥
15 दृष्टं नष्टं यथा विद्युच्चक्रं छिद्रगृहे यथा ।
परिणामः सर्वधर्माणां बालैरिव न कल्पयेत् ॥ ८४० ॥
भावाभावेन निर्वाणं बालानां चित्तमोहनम् ।
आर्यदर्शनसद्भावाद्यथावस्थानदर्शनात् ॥ ८४१ ॥
उत्पादभङ्गरहितं भावाभावविवर्जितम् ।
20 लक्ष्यलक्षणनिर्मुक्तं परिणामं विभावयेत् ॥ ८४२ ॥
तीर्थ्यवादविनिर्मुक्तं नामसंस्थानवर्जितम् ।
अध्यात्मदृष्टिनिलयं परिणामं विभावयेत् ॥ ८४३ ॥
संस्पर्शपीडनाभ्यां वै देवानां नारकाणि च ।
अन्तराभविका नास्ति विज्ञानेन प्रवर्तिता ॥ ८४४ ॥
25 जरजाण्डजसंस्वेदाद्या अन्तराभवसंभवाः ।
सत्त्वकाया यथा चित्रा गत्यागत्यां विभावयेत् ॥ ८४५ ॥
युक्त्यागमव्यपेतानि निःक्लेशपक्षक्षयावहा ।
N 371 तीर्थ्यदृष्टिप्रलापानि मतिमान्न समाचरेत् ॥ ८४६ ॥
आदौ निर्धार्यते आत्मा उपादानाद्विशेषयेत् ।
30 अनिर्धार्य विशेषन्ति वन्ध्यापुत्रं विशिष्यते ॥ ८४७ ॥
पश्यामि सत्त्वान् दिव्येन प्रज्ञामांसविवर्जितम् ।
संसारस्कन्धनिर्मुक्तं मूर्तिमान् सर्वदेहिनाम् ॥ ८४८ ॥

दुर्वर्णसुवर्णगतं मुक्तामुक्तविशेषणम् ।
दिव्यं संस्कारविगतं संस्कारस्थं प्रपश्यते ॥ ८४९ ॥
मूर्तिमान् गतिसंधौ वै तार्किकाणामगोचरम् ।
अतिक्रान्तमानुष्यगतिमहं नान्ये कुतार्किकाः ॥ ८५० ॥
नास्त्यात्मा जायते चित्तं कस्मादेतत्प्रवर्तते । 5
नदीदीपबीजवत्तस्य निर्गमः किं न कथ्यते ॥ ८५१ ॥
अनुत्पन्ने च विज्ञाने अज्ञानादि न विद्यते ।
तदभावे न विज्ञानं संतत्या जायते कथम् ॥ ८५२ ॥
अध्वत्रयमनध्वश्च अवक्तव्यश्च पञ्चमः ।
ज्ञेयमेतद्धि बुद्धानां तार्किकैः संप्रकीर्त्यते ॥ ८५३ ॥ 10
अवक्तव्यश्च संस्कारैर्ज्ञानं संस्कारहेतुकम् । N 372
गृह्णाति संस्कारगतं ज्ञानं संस्कारशब्दितम् ॥ ८५४ ॥
अस्मिन् सतीदं भवति प्रत्ययाश्चाप्यहेतुकाः ।
व्यञ्जकेनोपदिश्यन्ते तदभावान्न कारकम् ॥ ८५५ ॥
पवनं हि वह्नेर्दहनं प्रेरणे न तु संभवे । 15
प्रेर्य निर्वाप्यते तेन कथं सत्त्वप्रसाधकाः ॥ ८५६ ॥
संस्कृतासंस्कृतं वाच्यमुपादानविवर्जितम् ।
कथं हि साधकस्तस्य वह्निर्बालैर्विकल्प्यते ॥ ८५७ ॥
अन्योन्यस्य बलाधानाद्वह्निर्वै जायते नृणाम् ।
सत्त्वः प्रवर्तितः केन वह्निवत्कल्प्यते यतः ॥ ८५८ ॥ 20
स्कन्धायतनकदम्बस्य मनाद्याकारणो नु वै ।
नैरात्मा सार्थवन्नित्यं चित्तेन सह वर्तते ॥ ८५९ ॥
द्वावेतौ भास्वरौ नित्यं कार्यकारणवर्जितौ ।
अग्निर्द्वसाधकस्तेषां न च बुध्यन्ति तार्किकाः ॥ ८६० ॥
चित्तं सत्त्वाश्च निर्वाणं प्रकृत्या भासुरा नु वै । 25
दोषैरनादिकैः क्लिष्टा अभिन्ना गगनोपमाः ॥ ८६१ ॥
हस्तिशय्यादिवच्छाया(?)स्तीर्थ्यदृष्ट्या मलीकृताः । N 373
मनोविज्ञानसंछन्ना अग्निराद्यैर्विशोधिताः ॥ ८६२ ॥
दृष्टाश्च ते यथाभूतं दृष्ट्वा क्लेशा विदारिताः ।
दृष्टान्तगहनं हित्वा गतास्ते आर्यगोचरम् ॥ ८६३ ॥ 30
ज्ञानज्ञेयविभागेन अन्यत्वं कल्प्यते यतः ।
न च बुध्यन्ति दुर्मेधा अवक्तव्यश्च कथ्यते ॥ ८६४ ॥

भेरी यथा चन्दनजा बालैः कुर्वन्ति नान्यथा।
चन्दनागरुसंकाशं तथा ज्ञानं कुतार्किकैः ॥ ८६५ ॥
उत्थितः खलुभक्तश्च पात्रसंश्रितमात्रकम्।
दोषैर्मुखविकाराद्यैः शुद्धं भक्तं समाचरेत् ॥ ८६६ ॥

5 इमं नयं योऽनुमिनोति युक्तितः
प्रसादवान् योगपरो ह्यकल्पनः।
अनाश्रितो ह्यर्थपरो भवेदसौ
हिरण्मयीं धर्मगतिं प्रदीपयेत् ॥ ८६७ ॥
भावाभावप्रत्ययमोहकल्पना
10 कुदृष्टिजालं समलं हि तस्य तु।
सरागदोषप्रतिघं निवर्तते
निरञ्जनो बुद्धकरैश्च सिच्यते ॥ ८६८ ॥

तीर्थ्या कारणदिग्मूढा अन्ये प्रत्ययविह्वलाः।
N 374 अन्ये अहेतुसद्भावादुच्छेदं आर्यमास्थिताः ॥ ८६९ ॥
15 विपाकपरिणामश्च विज्ञानस्य मनस्य च।
मनो ह्यालयसंभूतं विज्ञानं च मनोभवम् ॥ ८७० ॥
आलयात्सर्वचित्तानि प्रवर्तन्ति तरंगवत्।
वासनाहेतुकाः सर्वे यथाप्रत्ययसंभवाः ॥ ८७१ ॥
क्षणभेदसंकलाबद्धाः स्वचित्तार्थविग्राहिणः।
20 संस्थानलक्षणाकारा मनोचक्ष्वादिसंभवाः ॥ ८७२ ॥
अनादिदोषसंबद्धमर्थाभावासनोदितम्।
बहिर्धा दृश्यते चित्तं तीर्थदृष्टिनिवारणम् ॥ ८७३ ॥
तद्धेतुकमेवान्यत्तदालम्ब्य प्रवर्तते।
यदा संजायते दृष्टिः संसारश्च प्रवर्तते ॥ ८७४ ॥
25 मायास्वप्ननिभा भावा गन्धर्वनगरोपमाः।
मरीच्युदकचन्द्राभाः स्वविकल्पं विभावयेत् ॥ ८७५ ॥
वृत्तिभेदात्तु तथता सम्यग्ज्ञानं तदाश्रयम्।
मायाशूरंगमादीनि समाधीनि पराणि च ॥ ८७६ ॥
भूमिप्रवेशाल्लभते अभिज्ञा वशितानि च।
30 ज्ञानमायोपमं कायमभिषिक्तं च सौगतम् ॥ ८७७ ॥
N 375 निवर्तते यदा चित्तं निवृत्तं पश्यतो जगत्।
मुदितां लभते भूमिं बुद्धभूमिं लभन्ति च ॥ ८७८ ॥

आश्रयेण निवृत्तेन विश्वरूपो मणिर्यथा।
करोति सत्त्वकृत्यानि प्रतिबिम्बं यथा जले ॥ ८७९ ॥

सदसत्पक्षनिर्मुक्तमुभयं नोभयं न च।
प्रत्येकश्रावकीयाभ्यां निष्क्रान्ता सप्तमी भवेत् ॥ ८८० ॥

प्रत्यात्मदृष्टधर्माणां भूतभूमिविशोधितम्। 5
बाह्यतीर्थ्यविनिर्मुक्तं महायानं विनिर्दिशेत् ॥ ८८१ ॥

परावृत्तिर्विकल्पस्य च्युतिनाशविवर्जितम्।
शशरोममणिप्रख्यं मुक्तानां देशयेन्नयम् ॥ ८८२ ॥

यथा हि ग्रन्थो ग्रन्थेन युक्त्या युक्तिस्तथा यदि।
अतो युक्तिर्भवेद्युक्तिमन्यथा तु न कल्पयेत् ॥ ८८३ ॥ 10

चक्षुः कर्म च तृष्णा च अविद्या[1]योनिशस्तथा।
चक्षूरूपे मनश्चापि आविलस्य मनस्तथा ॥ ८८४ ॥

इत्यार्यसद्धर्मलङ्कावतारो नाम महायानसूत्रं सगाथकं समाप्तमिति ॥ N 376

*　　*　　*　　*

ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत्।
तेषां च यो निरोधो एवं वादी महाश्रमणः ॥ 15

---

१ N अविद्यायोगिनस्तथा; our reading is based on T.

# प्रथमं परिशिष्टम् ।

## श्लोकसूची ।

## बौद्धसंस्कृतग्रन्थमालायां प्रकाश्यत्वेन संकल्पिता ग्रन्थाः

### १ नवधर्माः—

१ ललितविस्तरः Rs. 10·00 and 12·50

२ समाधिराजसूत्रम् Rs. 12 and 16·00

३ लङ्कावतारसूत्रम् Rs. 10·00 and 12·50

४ अष्टसाहस्रिका प्रज्ञापारमिता आलोकव्याख्यया सहिता Rs. 20·00 and 25·00

५ गण्डव्यूहसूत्रम् Rs. 16·00 and 20·00

६ सद्धर्मपुण्डरीकसूत्रम् Rs. 10·00 and 12·50

७ दशभूमिकसूत्रम् Rs. 10·00 and 12·50

८ सुवर्णप्रभाससूत्रम्

९ तथागतगुह्यकम्

### २ माध्यमिकमते—

१० मध्यमकशास्त्रं नागार्जुनीयम्, आचार्यचन्द्रकीर्तिविरचितया प्रसन्नपदाख्य-व्याख्यया संवलितम् Rs. 10·00 and 12·50

११ शिक्षासमुच्चयः शान्तिदेवविरचितः Rs. 10·00 and 12·50

१२ बोधिचर्यावतारः शान्तिदेवविरचितः प्रज्ञाकरमतिविरचितया पञ्जिकाख्यव्याख्यया संवलितः Rs. 10·00 and 12·50

### ३ योगाचारमते—

१३ सूत्रालङ्कारः आचार्यासङ्गविरचितः ।

### ४ विनयाः—

१४-१५ महावस्तु—लोकोत्तरवादिनां विनयः

१६ मूलसर्वास्तिवादिनां विनयः ( Gilgit Mss )

### ५ महायानसूत्रसंग्रहः

१७ प्रथमः खण्डः—सुविक्रान्तविक्रामिप्रज्ञापारमिता, वज्रच्छेदिका, शालिस्तम्बसूत्रम्, सुखावतीव्यूहः, कारण्डव्यूहः, प्रतीत्यसमुत्पादसूत्रम्, भैषज्यगुरुवैदूर्यप्रभसूत्रम्, राष्ट्रपालपरिपृच्छा, अर्थविनिश्चयसूत्रम्, रत्नगुणसञ्चयः Rs. 16·00 and 20·50

१८ द्वितीयः खण्डः—आर्यमञ्जुश्रीमूलकल्पः Rs. 20·00 and 25·00

**६ अवदानसंग्रहः—**

१९ अवदानशतकम् Rs. 10·00 and 12·50

२० दिव्यावदानम् Rs. 16·00 and 20·00

२१ जातकमाला (बोधिसत्त्वावदानमाला) सुभाषितरत्नकरण्डककथा च आर्यशूरविरचिता Rs. 10.00 and 12·50

२२-२३ अवदानकल्पलता क्षेमेन्द्रविरचिता Rs. 20·00 and 25·00

**७ प्रकीर्णग्रन्थाः—**

२४ महायानस्तोत्रसंग्रहः

२५ अश्वघोषग्रन्थाः—बुद्धचरितम्, सौन्दरनन्दम् ॥